निष्ठुरवक्रोक्त्यादिरूपा, कन्दर्पकथा—कामस्य कथा, कौकुच्यं द्विधा—कायेन वाचा, तथा च—"[1]भूनयणवयणदसणच्छएहिं करचरणकण्णमाईहिं । तं तं करेइ जह जह, हसइ परो अत्तणा अहस ॥ १ ॥ वायाए कोकुइओ, तं जंपइ जेण हसए अन्नो । नाणाविहजीवरुए, कुणइ मुहतूरए चेव ॥ २ ॥" "तह" त्ति येन प्रकारेण परस्य विस्मय उपजायते तथा चष्टितं च—फलनिरपेक्षा वृत्तिः स्वभावश्च—परविस्मयोत्पादनाभिसन्धिनैव तत्तन्मुखविकारादिकं स्वरूपं हसनं च—अट्टहासादि विकथाश्च—परविस्मापकविविधोल्लापरूपाः शीलस्वभावहासविकथास्ताभिर्विस्मापयन् परं "कंदप्प" त्ति कन्दर्पयोगात्कन्दर्पाः ते च प्रस्तावाद् देवास्तेषामियं कान्दर्पी तां 'भावनां' तद्भावाऽभ्यासरूपां करोति ॥ "मंतायोगं" ति सूत्रत्वात् मन्त्राश्च योगाश्च—तथाविधद्रव्यसंयोगा मन्त्रयोगं तत् कृत्वा भूत्या—उपलक्षणत्वात् मृदा सूत्रेण च कर्म—रक्षार्थं क्रिया भूतिकर्म, चशब्दात् कौतुकादि च "जे पउंजंति" त्ति प्राकृतत्वाद् यः प्रयुङ्क्ते 'सातरसर्द्धिहेतोः' सातार्थमिति भावः, अनेन पुनरुच्यते निःस्पृहस्यैतत्कुर्वतः प्रत्युत गुण इति ज्ञापयति, स आभियोगी भावनां करोति ॥ नाणे"त्यादि प्रकटम् । नवरम्—ज्ञानस्याऽवर्णवादी, यथा—"[2]काया वया य ते चिय, ते चेव पमायमप्पमाया य । मोक्खाहिगारियाणं, जोइसजोणीहिं किं कज्जं ? ॥ १ ॥" धर्माचार्यस्य—"[3]जच्चाईहिं अवन्नं, विहसइ वट्टइ न यावि उववाए । अहिओ छिद्दप्पेही, पगासवाई अणणुकूलो ॥ १ ॥ साधूनां च—"[4]अविसहणाऽतुरियगई, अणाणुवत्ती इमे गुरूणं पि ।

---

1 "भ्रूनयनवदनदशनच्छदैः करचरणकर्णादिभिः । तत्करोति यथा यथा हसति पर आत्मनाऽहसन् ॥१॥ वाचा कौत्कुच्यिकस्तज्जल्पति येन हसत्यन्यः । नानाविधजीवरुतान् करोति मुखतूर्याणि वा ॥२॥" 2 "कायाव्रतानि च तान्येव तावेव प्रमादाप्रमादौ च । मोक्षाधिकारिणां ज्योतिर्योनिभिः किं कार्यम् ? ॥१॥" 3 "जात्यादिभिरवर्णं विहसति वर्तते न चाप्युपपाते । अहितश्छिद्रप्रेक्षी प्रकाशवादी अननुकूलः ॥१॥"
4 "अविसहना त्वरितगतयोऽननुवृत्तय इमे गुरूणामपि ।"

संसारिजीव वक्तव्यता।

रणमेत्तपीइरोसा, गिहिवच्छलगा य संजइया ॥ १ ॥" 'मायी' स्वस्वभावनिगूहनादिमान्, यथोक्तम्—"गुंहइ आयसहावं, घायइ य गुणे परस्स सते वि । चोरो व सव्वसंकी, गूढायारो वितहभासी ॥ १ ॥" इदानीं विचित्रत्वात् सूत्रकृतेर्मोहीप्रस्तावेऽप्यासुरीभावना यत्कुर्वता कृता भवति तदाह—'अणुबद्धे'त्यादि स्पष्टम् । नवरम्—अनुबद्धरोपप्रसरस्वरूपम्—"निंचं वुग्गहशीलो, काऊण य याणुतप्पए पच्छा । न य खामिओ पसीयइ, अवराहीणं दुवेण्हं पि ॥ १ ॥" 'तथा' समुच्चये, 'चः' पूरणे, निमित्तम्—अतीतादि तद्विषये भवति 'प्रतिसेवी' अपुष्टालम्बनेऽपि तदासेवनात् ॥ शस्त्रस्य ग्रहणम्—आत्मनि वधार्थं व्यापारणं शस्त्रग्रहणं, विषभक्षणं, चशब्द उक्तसमुच्चयार्थः पर्यन्ते योक्ष्यते, 'ज्वलनं' दीपनमात्मन इति गम्यते, जलप्रवेशः, चशब्दोऽनुक्तभृगुपातादिपरिग्रहार्थः, आचारः—शास्त्रविहितः व्यवहारस्तेन भाण्डम्—उपकरणमाचारभाण्डं न तथा अनाचारभाण्डं तस्य सेवा—हासमोहादिभिः परिभोगः अनाचारभाण्डसेवा, सा च गम्यमानत्वाद् एतानि कुर्वन्तो यतयः 'जन्मजरामरणानि' उपचारात् तत्तन्निमित्तकर्माणि बध्नन्ति इति, अनेन चोन्मार्गप्रतिपत्त्या मार्गविप्रतिपत्तिराक्षिप्ता, तथा चाऽर्थतो मोहीभावनोक्ता । यतस्तल्लक्षणम्—"उम्मग्गदेसओ मग्गनासओ मग्गविप्पडीवत्ती । मोहेण य मोहेत्ता, सम्मोहं भावणं कुणइ ॥ १ ॥" फलं चाऽऽसाम्—"एयाओ भावणाओ, भावित्ता देवदुग्गइं जंति । तत्तो य चुया सता, पडंति भवसागरमणंतं ॥ २ ॥" इति सूत्रपञ्चकार्थः ॥ २६३-२६४-२६५-२६६-२६७ ॥ सम्प्रत्युपसंहारद्वारेण शास्त्रस्य माहात्म्यमाह—

---

क्षणमात्रप्रीतिरोषा' गृहिवत्सलाश्च संयताः ॥ १ ॥" १ "गूहते आत्मस्वभावं घातयति च गुणान् परस्य सतोऽपि । चौर इव सर्वशङ्की, गूढाकारो वितथभाषी ॥१॥" २ "नित्यं व्युद्ग्रहशीलः कृत्वा न चानुतप्यते पश्चात् । न च क्षामितः प्रसीदति अपराधिनोर्द्वयोरपि ॥१॥" ३ "उन्मार्गदेशको मार्गनाशको मार्गविप्रतिपत्तिः । मोहेन च मोहयित्वा सम्मोहीं भावनां करोति ॥ १ ॥" ४ "एता भावना भावयित्वा देवदुर्गतिं यान्ति । ततश्च च्युताः सन्तः पतन्ति भवसागरमनन्तम् ॥ १ ॥"

इइ पाउकरे बुद्धे नायए परिनिवुए। छत्तीसं उत्तरज्झाए भवसिद्धीयसम्मए ॥२६८॥ त्ति बेमि ॥

व्याख्या—'इति' एताननन्तरमुपवर्णितान्, "पाउकरे" त्ति 'प्रादुःकृत्य' कांश्चिदर्थतः कांश्चन सूत्रतोऽपि प्रकाश्य 'बुद्धः' केवलज्ञानावगतसकलवस्तुतत्त्वः 'ज्ञातजः' ज्ञातकुलसमुद्भवः, स चेह भगवान् महावीरः 'परिनिर्वृतः' निर्वाणं गतः, षट्त्रिंशद् उत्तराः–प्रधाना अध्यायाः–अध्ययनानि उत्तराध्यायास्तान्, भवसिद्धिकानां–भव्यानां सम्मतान्–अभिप्रेतान्, 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववदिति सूत्रार्थः ॥ २६८ ॥ निर्युक्तिकार एतन्माहात्म्यमाह—"जे[1] किर भवसिद्धीया, परित्तसंसारिया य जे भव्वा। ते किर पढंति एए, छत्तीसं उत्तरज्झाए ॥ १ ॥ तम्हा जिणपण्णत्ते, अणंतगम-पज्जवेहि संजुत्ते। अज्झाए जहजोगं, गुरुप्पसाया अहिज्जिज्जा ॥ २ ॥" योगः–उपधानादिव्यापारस्तदनतिक्रमेण यथायोगम् ॥

1 "ये किल भवसिद्धिकाः परीतसंसारकाश्च ये भव्याः। ते किल पठन्त्येतान् षट्त्रिंशदुत्तराध्यायान् ॥ १ ॥ तस्माज्जिनप्रज्ञप्तान् अनन्तगमपर्यवैः संयुक्तान्। अध्यायान् यथायोगं गुरुप्रसादादधीयेत ॥ २ ॥"

इति श्रीनेमिचन्द्रसूरिविनिर्मितायां उत्तराध्ययनसूत्रलघुटीकायां सुखबोधायां जीवाजीवविभक्तिनामकं षट्त्रिंशमध्ययनं समाप्तम् ॥

॥ समाप्तानि चाशेषाण्युत्तराध्ययनानि ॥

## श्रीउत्तराध्ययनसूत्रलघुव्याख्याव्याख्यातुः प्रशस्तिः ।

अस्ति विस्तारवत्युर्व्यां, गुरुशाखासमन्वितः । आसेव्यो भव्यसार्थानां, श्रीकोटिकगणद्रुमः ॥ १ ॥ तदुत्थवैरिशाखायाम-
भूदायतिशालिनी । विशाला प्रतिशाखेव, श्रीचन्द्रकुलसन्ततिः ॥२॥ तस्याश्चोत्पद्यमानच्छदनिचयसदृक्षावकर्णान्वयोत्थ-
श्रीधारापद्रगच्छप्रसवभरलसद्धर्मकिञ्जल्कपानात् । श्रीशान्त्याचार्यभृङ्गः प्रवरमधुसमामुत्तराध्यायवृत्तिं, विद्वल्लोकस्य
दत्तप्रमुदमुदगिरद् या गभीरार्थसाराम् ॥३॥ तस्याः समुद्धृता चैषा, सूत्रमात्रस्य वृत्तिका । एकपाठगता मन्दबुद्धीनां हितकाम्य-
या ॥४॥ आत्मसंस्मरणार्थाय, यथा मन्दधिया यया । अतोऽपराधमेनं मे, क्षमन्तु श्रुतशालिनः ॥५॥ आसीच्चन्द्रकुलोद्भूतो,
विख्यातो जगतीतले । अक्षमाराजितोऽप्युच्चैर्यः क्षमाराजितः सदा ॥६॥ धर्मोऽथ मूर्त्तिमानेव, सौम्यमूर्त्तिः शशाङ्कवत् । वर्जि-
तश्चाशुभैर्भावै रागद्वेषमदादिभिः ॥७॥ सुनिर्मलगुणैर्नित्यं, प्रशान्तैः श्रुतशालिभिः । प्रद्युम्न-मानदेवादिसूरिभिः प्रविराजितः
॥८॥ विपुलस्य महीपीठे, बृहद्गच्छस्य मण्डनम् । श्रीमान् विहारुकप्रष्ठः, सूरिरुद्योतनाभिधः ॥९॥ शिष्यस्तस्याऽऽम्रदेवोऽ-
भूदुपाध्यायः सतां मतः । यत्रैकान्तगुणापूर्णे, दोषैर्लेभे पदं न तु ॥१०॥ श्रीनेमिचन्द्रसूरिरुद्धृतवान् वृत्तिकां तद्विनेयः । गुरु-
सोदर्यश्रीमन्मुनिचन्द्राचार्यवचनेन ॥११॥ शोधयतु बृहदनुग्रहबुद्धिं मयि सविधाय विज्ञजनः । तत्र च मिथ्यादुष्कृतमस्तु
कृतमसङ्गतं यदिह ॥१२॥ अणहिलपाटकनगरे, दोहडिसच्छ्रेष्ठिसत्कवसतौ च । सन्तिष्ठता कृतेयं, नवकरहरवत्सरे चैव
॥१३॥ पट्टिकातोऽलिखच्चेमां, सर्वदेवाभिधो गणी । आत्मकर्मक्षयायाऽथ, परोपकृतिहेतवे ॥१४॥ दोहडिश्रेष्ठिना चाऽस्या,
लेखिता प्रथमा प्रतिः । जिनवाक्यानुरक्तेन, भक्तेन गुणवज्जने ॥१५॥ अनुष्टुभां सहस्राणि, गणितक्रिययाऽभवन् । द्वादश ग्रन्थ-
मानं तु, वृत्तेरस्या विनिश्चितम् ॥१६॥ ग्रन्थाग्रं सूत्रेण सह [१२५५०] श्रीउत्तराध्ययनलघुवृत्तिः परिपूर्णा ॥ संवत् १५४५
वर्षे कार्त्तिकशुदि ३ दिने श्रीधर्मघोषगच्छे मूलपट्टे श्रीधर्मसूरिसन्ताने श्रीपद्मशेखरसूरिपट्टालङ्करणगच्छाधिराजश्रीपद्मान-
न्दसूरिशिष्यवाचकश्रीभावशेखरवाचनार्थं लिखितमिदं मुनिना क्षमारत्नेन श्रुतज्ञानवृद्धये ॥ शुभं भवतु श्रीपार्श्वप्रसादात् ॥

---